**चित्रितानि चिन्तनानि**

इत्याख्यायां प्रकृतायां
रचनायामेकपञ्चाशद्
गदनानि (statements)
सन्ति। तानि च नूतनं गन्धं
जिघ्रासूनां कृते सृष्टानि
यानि यदृच्छया
हृदयादुद्गताभिर्भावधाराभि-,
श्चित्रैश्चानुसृतानि।

# चित्रितानि चिन्तनानि

संस्कृतेन रचितान्येकपञ्चाशत् गदनानि सचित्राणि।

# *Citritāni Cintanāni*

Fifty one illustrated statements in Saṁskṛta.

By S.Jagannatha.



Pub: *sanskritebooks* , Shankara

July 2018

इत ऊर्ध्वं पुटा गदनैश्चित्रैश्च पूर्णाः।
एते पुटाः समर्प्यन्ते तेभ्यो जनेभ्यो ये-
चित्राणि कामयन्तेऽथवा
लघुतराणि गदनानि वाञ्छन्त्युत
हनुमल्लाङ्गूलायितानुपदेशान् न रोचयन्ते।
चतुष्कोणेषु चित्राकारेषु
समतोलनस्य(Balance) अनुभवो
द्रष्टॄणां भवतीति कृत्वा,
मुक्त्वा त्रिचतुरानपवादान्,
चित्रेषु चतुष्कोणाकृतयः सृष्टाः।

# चत्वारि वाक्यानि

प्रकृता रचना, इङ्ग्लीष्भाषया विरचिताया Wrought Intentions इत्यभिधानायाः सक्वाचित्कभाषादोषायाः कुत्रचनाविशदाया बहुत्र संस्कारसापेक्षायाश्च मत्कायाः कृत्याः सास्कृत्याकृतिर्या चित्रेषु गदनेषु च प्रापितावश्यकलोपागमादेशा।

PDF रूपं धृतवती रचनेयं मुद्रणां नार्हति, कृतायां च मुद्रणायां चित्राणि म्लानानि दीनानि च प्रतिभायुः।

मुद्रणामस्याश्चिकीर्षते प्रकाशकजनाय प्रेषयामि JPEG रूपमस्याः कृत्याः।

sanskritebooks इत्याख्ये स्वीयेऽन्तर्जालस्थाने ममेतररचनावत् एतस्या अपि रचनायाः स्थापनेन कृतमदुपकाराय श्रीमते शङ्कराय नमः।

जगन्नाथस्य

मैसूरु

जुलै २०१८

१

लोकप्रसिद्धेरनुसारेण
काचिदस्ति लक्ष्मीनाम्नी देवता
या गृहानि प्रविशति
रङ्गवल्ल्याः (अग्रद्वाराणां पुरस्तात् रचितानां
परम्परानुगतया पद्धत्या रचितानां चित्रविन्यासानां )
द्वारा प्रतिदिनम् ।
अनुगृह्णाति च संपदम्।
हे श्रीः!
त्वाम् उपह्वये
एहि, पदं निधेहि रुचिरतमाभिः संकीर्णाभिश्च रेखाभी
रचितानां पुष्पाणामाक्रीडे
मम गृहाभ्यन्तःप्रवेशात् प्राक्
मह्यं संपदः अनुग्रहणात् प्राक्
कटाक्षयैता रेखा अपाङ्गेन,
याभिः कृता आकृतयः सौन्दर्ये त्वया पिस्पर्धिषन्ते।

## २

कस्मिंश्चित् काले कोऽप्यासीद् यो लघुकाष्ठसंग्राहकः।

स प्रतिदिनं वनं गत्वा काष्ठानि संगृह्य आजीविकार्थं

विक्रीणीते स्म।

कदाचित् कश्चन पथिकः

तेषु काष्ठेषु कृताभिरुचिः

काष्ठस्य कन्थां कणिकामूल्येनाक्रीणात्।

ततः स क्रेता तानि काष्ठानि अकर्तयत्,

द्विदिवसौ परिश्रम्य निर्यासेन समयोजयच्च।

तानि काष्ठानि कमप्यर्थम् अजनयन्।

अथवा,

द्रष्टारो जनाः काष्ठेषु तेष्वर्थम् अपश्यन्।

-- -- -- -- --

एवम् एकवर्षं यावत् प्राचलत्।

-- -- -- -- --

अथ कस्यचित् कालस्य,

राजसौधोपमेयस्य कस्यचि कस्यचिद् वास्तुनः पुरस्तात्

संभाषणमेतदश्रृणवम्।

‘भो! वास्तुस्वामिन्!

अहं स काष्ठसंग्राहको यस्मात् त्वं काष्ठान्यक्रीणाः।’

‘ अहं स्मरामि। किमपेक्षसे ?’

‘किं कतिचन काष्ठानि चिक्रीषसे ?’

‘क्षमस्व। तव काष्ठानाम् आवश्यकता ममेदानीं नास्ति।’

३

धावनस्पर्धायां
सर्वेऽपि जयशालिनम् अतितमां प्रशसन्ति।
परन्तु जयशाली जानाति यत्
विजये
साहाय्यकारिणी द्वे वस्तुनी अविस्मरणीयं पात्रं वहेते।
ते वस्तुनी , पादरक्षे।
दुःखाकरमिदमेव यत्
कोऽपि पादरक्षाभ्यां न समर्पयति कृतज्ञताम्।
आश्चर्यमिदमेव यत्
पादरक्षे कदाऽपि न प्रतीक्षेते
कृतज्ञताम् अभिदधानानि वाक्यानि।

४

शिलायां टङ्कितेभ्यो मण्डलाकारेभ्यो विन्यासेभ्यो

बहूनि तात्त्विकानि विवरणानि निःसरन्ति।

अत्र मम चिकथयिषां

रोद्धुम् अक्षमोऽस्मि।

चत्वारि मध्यदलानि विकसन्तं विवेकं व्यञ्जयन्ति।

स च विवेकः प्रसरत्यष्टदिशमिति सूच्यते

अष्टशृङ्गैरष्टचुञ्चूभिर्वा।

द्वादश गोलानि द्वादश नक्षत्रपुञ्जाः।

अन्ततो गत्वा

इदं वक्तुं शक्यते-

द्रढीयान् बन्धोऽस्ति

उज्ज्वलानां प्रकाशानाम्

अदृश्यैः प्रकाशैः

ये

नक्षत्रपुञ्जेभ्यः प्रणोद्यन्ते।

५

स्रष्टा प्रायतत,
शीर्षम् ऊर्ध्वभागे स्थापयितुं
पादौ चाधोभागे ।
एतेन स न संतृप्तः।
स विपर्यासं कृतवान्।
स पादौ ऊर्ध्वभागे तथा
शीर्षं चाधोभागेऽस्थापयत्।
तथाऽपि स न तृप्तिमाप्नोत्।
पुनश्च व्यत्यासं कर्तुमारेभे।
स पादौ मध्यभागेऽस्थापयत्
शीर्षं च क्वापि कोणे।
शीर्षं पादौ चाद्राङ्क्षन्।
"अस्मद्व्याप्तेऽधिकारे त्वं मा प्रविश।
तव अस्मत्स्रष्टृत्वे न संदेह्मः।
परन्त्वेतदनुल्लङ्घनीयं सत्यं यत्
वयं-सृष्टानि वस्तूनि-यानि
स्वीयं मस्तिष्कं बिभृमः।
तद् घनं वा द्रवं वेत्यन्यदेतत्।
वयमस्मदधीनं दर्पणं गृह्णीमो यत्र
अस्माकं प्रतिबिम्बं वयमेव दिदृक्षामहे।
अस्माकं स्थानेषु विपर्ययं वयमेव कुर्महे-
यदि चिकीर्षामहे।"

६

जिराफ्प्राणिनः कन्धराऽतिदीर्घा।
परन्तुं तस्या वक्रीकरणं सरलम्।
अत्र केचन विषयाः अवधेयाः-

१.जिराफ् स्वस्य चक्षुषी अत्युन्नतं यथा स्यात्तथा स्थापयितुं
शक्नोति तस्मात्
एष न केवलं मनुष्यान् परन्तु मनुष्याकारान् वन्यानपि
पशून् द्रष्टुं शक्नोति।

२. जिराफ् स्वस्य जिह्वाम् अतिदीर्घं यथा स्यात्तथा
प्रसारयितुं शक्नोति जानाति च
कण्टकान्, पुष्पाकारान् कण्टकानपि, तान् वञ्चयितुमपि।

३.जिराफ् स्वस्य शक्तिं प्रदर्शयितुं शक्नोति सिंहानां पुरस्तात्।
एतत् सत्यं तस्य शृङ्गौ न बलिष्ठौ।
परन्तु- अन्यदपि सत्यमेव यत्
पाडनं (पादैस्ताडनम्) तस्य घोरम्।

हा हन्त हन्त,
एतानि भाषणानि क्व निलीयन्तां
जिराफ्केन दृष्टेषु
सङ्घश आचिक्रंसमाणानां सिंहानां नखेषु ?

७

लघवः कीटाः अन्धकारे प्रकाशन्ते।
कतिचन कोटराणि, कतिचन लघुशाखाः
कतिचन पत्राणि च दीप्यन्ते।
अल्पकालिकं क्षणिकमपि
अद्भुतं यद् दीपनं तत्
द्वादशघण्टापर्यन्तस्यान्धकारस्य महिम्ना जायते।
अन्धकार! तुभ्यं नमः।

## ८

त्वं द्रष्टुं शक्नोषि
न केवलं साधारणान् मीनान्
परन्तु ईल् (Eel), जे़ल्लीफि़ष्(Jelly fish)नक्रा इत्येतदादींनि च
सर्वाण्यपि यादांसि निर्मले जले।
उपविशसि यदि त्वं दूरे
प्रेक्षसे चैतान्,
सर्वानपि नृत्यतो मयूरान् इव।
अग्रथित्वा तत्संपर्कं यदि तरसि,
सर्वमपि निःसमस्याकं भवति ते।
अतितमां जागृहि,
तव वस्त्रं षार्क्प्राणिनः दंष्ट्रया न ग्रथ्येत।
जागृहि,
उदास्व अथवा
मृत्युपाशेन क्रीडनमारभस्व।

९

त्वमद्य प्रेक्षितुं शक्नोषि
अतिजम्बूवर्णान् (Infrared )
अतिरक्तवर्णांश्च (Ultraviolet)
किरणान्।
एतत्तेऽत्यधिकस्य गर्वस्य कारणं म भूत्।
एतन्मा विस्मर।
कस्मिंश्चिन समये
त्वम् ऋजुरोहितस्य
दर्शनसुलभानपि वर्णान्
प्रेक्षितुं नाशक्नोः।
एतदेव समीचीनं कारणं भवत्वधुना
तवात्यधिकस्य नम्रत्वस्य।

१०

अस्मिन् विश्वस्मिन् अनेके विस्मयजनकाः सन्ति विषयाः

यथा

सांप्रदायिका मठाः

ये शास्त्रीयसिद्धान्तग्रन्थानां संग्राहकाः।

तथैव ते

सांप्रदायिकानाम् आचाराणां स्थानानि च यत्र-

महागुरवः दुरूहतत्त्वशास्त्रं योगं

बोधयन्ति।

विशिष्टकोणाकृतिमत्सूर्ध्वस्थलेषु

मया वीक्षितेषु

अन्यैर्यथा न वीक्ष्ये तथा उपविश्य

मठस्य भित्तिषु तत्रत्ये च वाते

विलिलीषे

पिपृच्छिषामि च मम हृदयम्।

"किं नाम मनः?

लौकिकानां व्यवहाराणां

ध्यानस्य च

कः संबन्धः?

अन्ततो गत्वा

कोऽहम्?"

## ११

## जानासि वा किमित्यहं क्रुध्यामि जनतायै ?

* * * ** ** ** ** *

स्रष्टा सृष्टवान् निबिडेऽरण्ये
गुल्मपत्रेषु वृक्षेषु सस्येषु वल्लीषु लघुतृणेषु च-
विन्यासानाम्, आकृतीनां वक्रत्वानां मृदूनां कम्पानां च
सर्वत्रात्यधिकवैविध्यमयीं सौन्दर्यसंपदं
अतिलज्जालवो वन्या मृगा अपि संपदमेतां प्राप्तवन्तः।
एनिमल् प्लानेट् (Animal planet) तथा
डिस्कवरी चानल्(Discovery channel )
इत्याख्ये द्वे दूरदर्शनवाहिन्यौ
पूर्वोक्तं सर्वं
जलीयसस्येषु जलीयपशुषु च
दर्शयन्ति।
किमर्थं जनता
व्यनाशयदेतां संपदं
नगरेषु ?

## १२

मम मित्रं कङ्कतिकाम् आदाय
केसरिणः केसरान् प्रासाधयत्।
यस्य केसराः पूर्वं परुषा आसन्।
इत्थं चाज्ञाम् अकरोत्-
प्रथमाय केसराय-
"त्वमनावश्यकं कम्पं मा कुरुष्व"
द्वितीयाय केसराय-
"तवाग्रभागः पादतलं मा स्पृशतु।"
तृतीयाय केसराय-
"त्वमन्यैः केसरैः ग्रथितो मा भव।"
चतुर्थाय केसराय
"त्वं कदाऽपि एकाकी सन् मा नृत्य।"
पञ्चमाय केसराय-
"तव लघुतमोऽपि कम्प इतरकेशजैः कम्पैः लयं
प्राप्नोतु।"
कस्यचिदथ कालस्य-
अप्रतीक्षितः कश्चन वन्यः केसरी दृष्टो योऽसंयतकेसरः।
संयतकेसरः केसरी झटित्यकथयत्।
"अहं जानामि-
ममाग्रे स्थितं त्वां केसरिणम्।
परन्तु-
अहं कोऽस्मि ?"

१३

पिटकस्य निर्मातार आदौ वेणुं कर्तयन्ति
कुर्वन्ति च दीर्घं सूक्ष्मांश्च तन्तून्
हस्तान् अङ्गुलीश्च
वयनयन्त्राङ्गानीव उपयुञ्जानाः
वातुमारभन्ते।
तेषां कर्म काचित् कला।
तेषां श्रद्धा काऽपि कला।
वेणूनां खण्डाः तेषां हस्तकौशलहेतोः
श्लक्ष्णतन्त्वाकारं प्राप्नुवन्ति।
परन्तु तदेमे पिटकनिर्मातारो
स्वेषां कलावित्त्वं विस्मरन्ति
यदा विक्रीणन्ति पिटकान्
'पिटकवयनं काचित् कला' इत्यजानद्भिः क्रीणद्भिः
न्यूनमूल्येन विक्रेतुं निर्बन्धं च कुर्वाणैः।

१४

कुन्तलवतः केशान् न रोचयेऽहम्।

केचन कथयन्ति तान् सुन्दरान् मुग्धांश्च।

परन्तु ते न जानन्ति मम धर्मसंकटम्।

अहंतु कङ्कतिकां कार्यव्यग्रां दिदृक्षे।

केशान् ऋजूकर्तुं कृतेन सफलेन प्रयत्नेन जातं स्मितं

कङ्कतिकाया आस्ये  दिदृक्षे।

कदाऽप्यहं कङ्कतिकाया रोदनध्वनिं न शुश्रूषे।

## १५

हे मृत्युदेवस्य वाहन !
भारतीयानां श्रद्धाया अनुसारेण
त्वमसि महिषो यः
क्रूरशृङ्गो बलिष्ठनिटिलश्च।
यदि त्वं मामाक्रामसि
नाहं जीवामि।
कस्मिंश्चन विषये ममास्ति संशयः।
त्वं मां प्रस्तुम्पितुं शक्नोषि तीक्ष्णाभ्यां शृङ्गाभ्याम्।
आहोस्वित्, मां भङ्क्तुं शक्नोषि
बलिष्ठेन देहेनातिभारेण।
परन्तु किमर्थं मृत्युदेवः स्वयमेवास्यति पाशम्
आकृषति च माम् ?
येन बहुहिंसामनुभवन्नहं न जीवामि नापि म्रिये।
किमर्थं स त्वां नाज्ञापयति मां हन्तुम् ?
तव शक्तिं न जानति वा सः ?

आस्माकः काङ्ग्रू केवलं पृष्ठभागे वर्तमानाभ्यां पादाभ्यां
शिलामयं वा मृन्मयं वा भूतलं जिघृक्षति दृढं
पुप्लूषते च लीलया,
उच्चावचासु शिलास्वध ऊर्ध्वं च
पतनभयलेशेनापि हीनः।
तस्य ह्यन्तरस्थीनि बलवन्ति।
परन्तु समस्येयमेव-
अन्योऽपि काङ्ग्रू एतैः सर्वैरपि समुपेत
आस्माकेन काङ्ग्रूकेन
नियुयुत्सते।

## १७

माणिक्य! किं ते नामधेयम् ?
क्षमस्व। त्वां 'माणिक्य' इति समबोधयम्
ततश्च 'तव नामधेयं कि'मित्यपृच्छम्।
मूर्खोऽस्मि ननु!
मुहूर्तं स्तब्धो भव।
अहो न जानामि तव वास्तविकं नाम।
तव नामकरणसंस्कारप्रसंगे
तव नाम माणिक्यमित्यन्यैर्दत्तम्।
ते विचारं नाकुर्वन्-
तवार्हतानुसारं तव किं नामधेयं योग्यमिति;
विशेषतस्तु
किं नामधेयं **त्वं** रोचयसे इति।

१८

‘विविधजीवनशैलीमन्तो
नानाचलनरीतियुक्ताश्च जीविनः
समुद्रे प्रथममुत्पन्नाः
येषां
भक्षणे, इतरजीविहनने, निगूहने च
अगणनीयं वैविध्यम्’
इति
वैज्ञानिकाः प्रतिपादयन्तु।
अहं तु विनयेन दार्ढ्येन च वदामि यत्
‘असंख्येयाभिः
क्वचिदुत्कृष्टाभिः क्वाप्यपकृष्टाभिः
क्वचनानिर्धारणीयस्तरवतीभिः
भावनाभिः
जीवनं
मनुष्यलोके समुपक्रान्तं, नान्यत्र।’

१९

व्यावर्तनी(Spanner)व्यावर्तयति कीलकं (bolt),

तच्च स्थापयत्युचिते स्थाने।

न केवलमेतदेव,

उपकरणस्य माहात्म्यमपि

अवशेषयति।

२०

"रुचिरमिदं यादः
पशुर्वा उद्भिज्जो वा
इति निर्धारणा न शक्यक्रिया
वराक एष दुर्बलस्तथा मुग्धो
यथा स्वहस्तपादौ कथमुपयोज्याविति न जानाति"
इति कृत्वा
तस्य साहाय्यार्थमधावम्।
झटिति स
कण्टकाञ्चितेन सूचीसदृशेन तुण्डेन
मामदशत्।

२१

पगोडानामकेषु देवालयेषु
एकः कुम्भो, बहुस्तरवन्ति चक्राणि च
प्रतिनिदधति
अमुकम् अमुकम् इत्यादि..
ध्यानं यदा कुरुषे त्वं मनसा क्रामसि सर्वानपि स्तरान्
यत्फलतया त्वं तिष्ठसि मोक्षाख्यप्रधानद्वारस्याग्रे।
हे मित्र,
निशितकोटिं कुम्भभागं माऽऽरोह
मा च हिंसामनुभव मा च पत।
स्तरेष्वेव चलनाय पर्याप्तमस्ति स्थलम्।
स्तरेषूपविश स्थिरं समीचीनं च।
तीक्ष्णमग्रभागं सावधानं पश्य
प्रमोदं चानुभव।

२२

पुष्पेषु भ्रमरैः संभाषमाणेषु
परस्परेण स्मितं कुर्वाणेषु च
तानि किमर्थं जना अवचिन्वन्ति ?
तत्कन्धराश्च सूत्रैः संयोज्य
कृतकान् गुच्छान् कुर्वन्ति ?

## २३

## अवलग्नौ यमलौ

अङ्गानि मिथः संयोजयेते
शल्यचिकत्सया तानि वियोजयितुं शक्यते
येनोभावपि यमलौ पार्थक्येन चलितुं शक्नुतः।
आस्तां नाम तत्।
सदाऽप्यपरेषु मनुजेषु मनसाऽवलग्ना मनुजाः
कदा वियोज्यन्ते ?
कदा प्रारभन्ते ते स्वतन्त्रं चिन्तयितुम् ?
कया शल्यचिकित्सया ते वियोज्येरन् ?

एतस्मिंश्चित्रे दृष्टे-

मिथः संबन्धलेशेनापि शून्यौ द्वौ विषयाववधीयेते।

**प्रथमो विषयः-**

मनि प्लाण्ट् (Money plant)नाम्नी लता छायायुक्तेऽपि
स्थले वर्धते
या मङ्गलकरीति जनानां विश्वासः।
या चाल्पमेव सूर्यातपम् आदित्सते।
एषा दर्पणाय नासूयति।
तथापि दर्पणं परितो निबिडं वर्धते।
तथा दर्पणतलमेषाऽऽवृणोति यथा
जनमुखानां प्रतिबिम्बं दर्पणे न दृश्यते।

**द्वितीयो विषयः-**

वर्तुलः शृङ्गः मृगस्य सदाऽपि समस्यां जनयति।
विशेषतः रैन् डीर् इत्याख्यस्य प्राणिनः।
चित्रकाद् व्याघ्रात् सिंहाच्च भीतो धावन्नेष
बलवद् गृह्यते तरुगुल्मेषु।
शृङ्गस्यैतस्य सृष्टिरेव करुणां जनयति मनुष्येषु।

## २५

केषाञ्चन कन्दुकानां वर्णो नीरसः
अपरेषां कन्दुकानां वर्णो गाढः किन्तु अक्षि कुष्णाति।
बहून् समयान् ते नाचलन्।
ते स्थिताः सन्तः स्थिरा आसन्।
कोऽप्याह-
'हा धिक्- विरूपा एते।'
कोऽपि बाल आगतः।
पादाभ्यां बलवत् तान् प्राहरत्।
कन्दुका इतस्ततोऽधावन्।
तेऽलुठन् पर्यवर्तन्त च।
सर्वेऽपि मिलिता जना अवदन्
'अहो हृदयङ्गमा एते।'

२६

वन्याः पशवो मिथो युद्ध्यन्ते,

यत्फलं मृत्युरेव।

परन्तु ते यद् युद्ध्यन्ते तत्

कस्मिंश्चन काले,

केषुचन प्रदेशेषु,

कस्माच्चित् हेतोश्च।

भ्रमर आकृष्यते कमलस्य परिमलेनेति प्रसिद्धिः।
कतिचन कुसुमानि निर्गन्धीनीति केचन वदन्ति।
वैज्ञानिका नैतदङ्गीकुर्वन्तीति भाति।
पुष्पाणां विकसनस्य प्रयोजनमेव
परागस्पर्शहेतोः कीटानाम् आकर्षणम् ।
पुष्पान्निःसरन्तं सूक्ष्मं गन्धं मानवानां नासिका
मा अभिजानातु
कीटानां तु नासिका बाढमभिजानाति।
वर्णमयानामपि पुष्पाणां वर्णान्
शुनां चक्षूंषि नाभिजानन्ति
यान् अभिजानन्ति मनुष्याणां चक्षूंषि।

## २८

जीवच्चक्षुः
जीवत्पादौ
जीवद्बाहू
जीवद्धृदयं च
रिरक्षिषसि
उत्तरध्रुवप्रदेशे निवासकाले।
यदि त्वमसि मनुष्यजातिः
त्वमाच्छादय ऊर्णानिर्मितानि स्थूलानि वस्त्राणि।
यदि त्वं नासि मनुष्यजातिः
तव चर्मणि कम्बलत्वं सृज।

२९

पुष्पाणि
पत्राणां मुखानि।
पत्राणि च
पुष्पाणां हस्ताः।

३०

‘उपक्रमो निर्वर्णः,

उपसंहारः सुवर्णः,

कर्मणोऽन्तिमः स्तरः पूर्णतायाः प्रमाणम्’ इति च

सर्वदा प्रतिपादयितुं न शक्यते।

अन्तिमं स्तरमस्पृशदपि कर्म

अवधीरणां माऽवाप्नोतु

यन्न व्यञ्जकमनर्हतायाः प्रत्यूहस्य वा।

कदाचित्

मतिकृतं स्थगनं

विफलादुपसंहाराद् वरम्।

कर्म कर्तव्यमेवेति केचिद् ब्रूयुः।

अहं तूपदिशामि-

‘स्थगय कर्म, तस्य स्थगनं वरमिति जानासि चेत्’

इति।

अथवा-

‘कर्मणः स्थगनमेव तव कर्तव्यं भवति,

कर्मोपसंहारचित्रं दुर्वर्णं भवति-

कर्मानुपसंहारचित्रमेव सुवर्णं भवतीति च

जानासि चेत्’

इति।

इदं च नित्यं साधनार्थमाह्वानम्(Challenge)।
कथं पूर्वमप्रयुक्तो वर्णः प्रयोक्तव्यः ?
कदाचिच्च कलावित् प्रयुक्तमेव वर्णं
पुनः प्रयुङ्क्ते गत्यन्तराभावात्।
यत्फलत्वेन
कदाचिच्चित्रकलाविदुज्ज्वलं कृष्णवणम्
अथवाऽनुज्ज्वलं कृष्णवर्णम् उपयुङ्क्ते।
अथवा कतिचनपरिमाणकं रिक्तं स्थलं
केनापि वर्णेन न पूरयति
यो वर्णोऽवशिष्यते स श्वेतवर्णः।
सर्ववर्णनिवारकत्वमेव कृष्णत्वमिति
सर्ववर्णनिःसारकत्वमेव श्वेतत्वमिति च
ब्रूयुर्वैज्ञानिकाः।
परन्त्वेते न निराकुर्वन्ति
'कृष्णस्य, श्वेतस्य,
वर्णानां च- मध्ये
कोऽपि अविभाज्यः सम्बन्धोऽस्ति'
इत्युक्तिम्।

## ३२

### नीलमणेरदर्शनं

चित्रकलाविदां न महती विनष्टिः।
ये स्वयं नीलमणिं स्रष्टुं शक्नुवन्ति।
‘सृष्टम्’ इति शब्दस्य कोऽर्थः?
‘अहं मन्ये अमुकमिदमेव’,
अथवा
‘अमुकममुकस्य सदृशम्’,
इति अभिप्रायद्वयस्य मध्ये क्वापि तिष्ठति
सृष्टस्य लक्षणं प्रायः।
अथवा को वेत्तु-
इदं पूर्वसृष्टानां वस्तूनामेव पुनरवतारः।

३३

भोश्चित्रकलावित् !

कथय मे

मिथः पार्थक्येन भासमानान् कति वर्णान्

त्वमुपयुङ्क्षे ?

‘सर्वानपि हृद्गतान् भावान् अभिव्यञ्जयितुं

विश्वस्मिन्नस्मिन् लभ्या वर्णच्छायाः पर्याप्ता’

इत्यङ्गीकुरुषे वा ?

अथवा

‘विश्वस्मिन्नस्मिन् लभ्या वर्णच्छाया दर्शयितुं

सर्वेऽपि हृद्गता भावाः पर्याप्ता’

इत्यङ्गीकुरुषे वा ?

## ३४

परिसरविषयिण्यां प्रज्ञायां जागरितायामपि

किमर्थं जनता

देवानर्चति

वास्तविकैः पुष्पैः ?

किमर्थं च सा सभासु

भाषणकृद्भिर्हारान् धारयति ?

किमर्थं च प्रियेभ्यः पुष्पगुच्छान् समर्पयति ?

किं सा न जानाति

भ्रमराणां गानानि नर्तनानि च पुष्पाण्यवलम्बन्त इति ?

उद्भिज्जेषु स्मितस्य विकासः

मनुष्याणां जीवनस्य मूलमिति च ?

एतत्तु सा जानीयात् यत्-

सत्यामपि

कृतकपरिमलसमेतानाम्

अनपकृष्टानां च

कर्गजैः निर्मितानां

पुष्पाणाम्

विपणौ समृद्धौ

जनता

वास्तविकानामेव पुष्पाणां हत्यया

आत्मानमेव हन्ति।

३५

मधुरमधुराणि खाद्यानि
नयनाकर्षकाणि यथा स्युस्तथा
स्थाप्यन्ते आपणेषु।
ब्रेड्(Bread)विक्रेता अथवा ब्रेड्(Bread)विक्रेत्री,
चाकोलेट्(Chocolate ) बिस्कत्(Biscuit)रस्क्(Rusk)
इत्यादीनामपि विक्रेताऽस्ति अथवा विक्रेत्र्यस्ति
जिह्वाचापल्याख्यमहारोगग्रस्तानां
मधुमेहाख्यलघुरोगग्रस्तानां
चक्षूंषि पतन्ति मधुरेष्वेतेषु खाद्येषु
हन्त हन्त न निमीलन्ति।
प्रतिदिनमेतेषां विक्रेताऽथवा विक्रेत्री
सत्यप्येतैः संपर्के
न खादत्येतानि खाद्यानि,
नापि तत्खादनं मनसाऽपि चिन्तयति।
आहारे परमावश्यकीं दृढां नियन्त्रणां विना
कोऽपि न भवति योगी, काऽपि न भवति योगिनी।
खाद्यवस्त्वापणो मम मात्सर्यस्य कारणं, यत्र-
योगी योगिनी च स्मितं कुर्वाते।

३६

अल्पतमोऽपि व्यत्यासः
महदेव वैसादृश्यं सृजति
समानेऽपि स्तरे।
यथा-
अत्रैव वामपुटे वर्तमानं चित्रं
द्वितीये पुटे चित्रितस्य चित्रस्य
अनुजं वाऽग्रजं वा प्रतीयते।
परन्तु आकारवैलक्षण्यं बाढं वहते।

३७

बाह्ये स्तरे रेखाणां मध्ये
वर्तमानानि चित्राणि
सावधानं दृश्यन्ताम्।
कदाऽप्यप्रमादिनां
दृढसंयतानि गाढवर्णानि तथा स्थूलानि वस्त्राणि धरतां
द्वारपालकानामिव, सैनिकानामिवाहोस्वित्
सर्वकारकार्यालयीयानां सेवकानामिव प्रतिभान्ति।
तेषां वस्त्रैर्देहे सदा घर्मोऽस्ति
यो बहुविधानां नरकाणामन्यतमः प्रतिभाति मे।

“ चित्रमिव काष्ठेव च प्रतिभान् कीटः
स्वस्य वास्तविकं कीटत्वमजानताम्
अपरेषां कीटानां ग्रहणेन तद्भक्षणेन च
जीविकां निर्वहते।
चित्रकाष्ठाद्याकृतिसादृश्यधरणनैपुण्यं यत् स धरति तत्
केवलमुदरनिमित्तकं स्यात्
तथाऽपि विस्मयकारि
तेन ये भक्ष्याः कीटास्ते
तस्य दंष्ट्रां वञ्चयितुं न शक्नुवन्ति”
इति **वयम्।**
“चलनलेशं विना प्रतिमायोगमिवाभ्यस्यन्नहं
कदाचिदपरेषां कीटानां ग्रहणे न भवामि सफलः।
तेषां पलायनकौशल्यं मम तद्ग्रहणकौशल्यादधिकतरम्।
‘उपवास’ इति शब्दः
मयाऽपि रचिते निघण्टौ वर्तते ”
इति **सः।**

३९

हे कूर्चिकाः !

एतदवधि युष्माभिः

बहवो वर्णमया

विन्यासा आकारा भावाश्च

जनतायाः प्रीत्यर्थं कृताः।

भिन्नतमासु यास्वपि कास्वपि चित्रश्रेणिषु

यूयमसृजत चरित्रम्।

प्राप्तोऽधुना युष्माकं विश्रान्तेः समयः।

यूयमेवाधुना

कलारूपाणि,

इतिहासस्य निर्मातृणि,

नानाविधकथानां मूलानि च

वस्तूनि।

## ४०

हे भोः !

किमहमभिदधामि युष्मान्

ब्रह्माण्डस्य निर्मित्यर्थमावश्यकीरिष्टकाः

लौकिकव्यवहाराणां प्रचोदयित्रीः शक्तीः ?

आहोस्वित्

कल्पितरेखाणां साहाय्येन

कल्पितानि पत्राणि कल्पितांश्च विन्यासान्

योजयन्तीः

कल्पिता रेखाः ?

४१

वैज्ञानिकाः किल वदन्ति-

इतिहासारम्भात् पूर्वतरे समये

येऽवर्तन्तादिमानवास्ते

नाधुनिकमानववत्

परमोत्तुङ्गं बुद्धिवैभवं प्राप्नुवन्।

प्राणिरङ्गस्थले(circus) दृढं ग्रथितानां रज्जुषु

विस्मापकदेहभङ्गीक्रियादीनां प्रदर्शयितारो मानवाः

मानवापेक्षया

निम्नतरे बुद्धिस्तरे जीवनं कृतवद्भिः

बहुपूर्वकालिकैः कपिभिः सादृश्यमीप्सन्तो

विगतिपथे जिगमिषन्ति किम् ?

एवमभ्यूहस्य कारणमिदम्ः-

अत्युत्कृष्टोऽपि लङ्घनकूर्दनादिक्रीडासु

मानवो

न विजयते साधारणस्य कपिशिशोः पुरस्तात्

उत्पतने धावने शीर्षाधोमुखत्वक्रियायां च

पटुतरस्य।

## ४२

क्रीतान्याभरणानि पश्यतां प्रायिक एष व्याहारः
सविस्मयस्फुरणः-
"अहो अद्भुतमिदमाभरणं सुन्दरं भव्यं कान्तिमच्च।"
परन्तु
"आभरणमेतन्महार्घं स्यात् परन्तु न सुन्दरं
नापि विशिष्टविन्यासवत्"
इति सत्यं वदन् जनः
उन्मत्त इति लोकज्ञानीहीन इति च परिगण्यते।
कतिचन बाढमपकृष्टानि यानि विशिष्टाकृतिहीनानि।
"अस्माभिरपि आभरणापणं प्रवेष्टुं शक्यते
भूषणानि क्रेतुं च शक्यते " इति च
सगर्वं घोषयितुमिव
मम मित्रैः क्रीतानि कतिचन भूषणानि।
धैर्येण घोषयितुं शक्नोमि यत्-
एतान्याभरणानि न चारूणि।
परन्तु
मूर्खाणां साम्राज्ये बुद्धिमत्तर इतीवाभिनयन्
अद्भुतरसमिव दर्शयन् वदामि-
"युष्माभिः क्रीतानि सर्वाण्याभरणानि
देवताभिर्धार्याणि"।

## ४३

टापिर्(Tapir)नामकस्य प्राणिनो विषये
कस्यचन सत्यस्य निरासो न शक्यते।
विना दीर्घां शुण्डां
विना च विततां कर्णशष्कुलीं
गजेन स्पर्धितुं कोऽपि न शक्नोति।
यस्य "न सन्ति"
इति कथनार्हेषु धर्मेषु
महादेहत्वं बुद्धिमत्त्वं शोभनाकृतित्वं च स्थानं प्राप्नुवन्ति,
यं चाधिकृत्य
पौराणिक्यः कथा अपि नैव सन्ति।
स जानात्येव
"वन्यप्राणिसौन्दर्यस्पर्धायां
सुवर्णपदकं न लभे,
परन्तु कनिष्ठपक्षत्वेन
कांस्यपदकं लभे " इति।
एतेनैव ज्ञानेन स हृदयेऽनुभवति
पीयूषपानमिव।
अहं त्वन्यच्चिन्तयामि-
भगवतो गणेशस्य वदनेन सादृश्यं
टापिर्प्राणिनो मुखमधिकतरं वहते
गजस्तु न्यूनतरम्।
"टापिर्! जय! जय!"

टान्सेनिया(Tanzania) देशस्थे निबिडे वने
कोऽपि ''पक्षिचिकित्सकसङ्घः''
कदाचित् दक्षिणे पक्षे व्रणितं डयनशक्तिहीनं च
कमपि गृध्रमपश्यत्।
तस्य सङ्घस्य सदस्यानां चक्षुर्भ्यः अश्रुधारा प्रावहत्,
हृदयाच्च कारुण्यधारा।
सदस्याः सर्वेऽधावंस्तत्र यत्र गृध्रः पतितः।
तमादाय ते चिकित्सामकुर्वन्।
आदौ मन्दं मन्दं
तदनु द्रुततरं पक्षौ व्याधून्वन् गृध्रः
डयमान ऊर्ध्वं गच्छन् क्रमेण दृष्टिपथाच्च्युतः।
सङ्घस्य सदस्यानां मुखेभ्यः
''अस्माकं चिकित्साकर्म सफलमभूत्
दैवात् गृध्रस्य प्राणा रक्षिताः।
अस्माकं हृदि वर्तमानः कृपागुणो न व्यर्थोऽभवत्।''
इत्यादयो वाचो निरसरन्
याः संन्तोषविस्मयाभ्यां मिश्रिताः।
एतावता कालेन क्षुधिताः सर्वे।
ततस्ते कांश्चन कपोतान्, शुकांश्च
गुलिकास्त्र(Rifle) प्रयोगेण
अघ्नन्।
कबल्यकुर्वंश्च।

४५

वस्त्रेषु बाभान्ति
वर्णमयानि चित्राणि।
केषाम् ?
पुष्पाणामुत पत्राणाम् ?
एतादृंशि पुष्पाणि पत्राणि वा
कुत्रापि न सृष्टानीति मा तर्कय।
अत्रैव
तवैव
पुरस्तात्
यानि दृश्यन्ते तानि
सृष्टान्येव।

## ४६

केनचन शिल्पिना शिलायां
विविधाः शिल्पविन्यासाष्टङ्किता ये
देवालयप्राङ्गण ऊर्ध्वभागे मनो हरन्ति द्रष्टॄणाम्।
मयोक्तं "द्रष्टॄणाम्" इति,
न पुनः "अद्रष्टॄणाम्" इति।
केचन जनाः सन्ति ये
गर्भगृहे वर्तमानाया देवप्रतिमाया दर्शने परमोत्सुकाः
नैव पश्यन्त्येतान् सुन्दरान् विन्यासान्।
यद्यप्यपरे केचन जनाः पश्यन्ति तथाप्युदासते।
कदाचिदुत्कन्धरस्य मम चक्षुषोः पथि पतिता एते
विन्यासाः।
च "मया साक्षात्कृता देवता" इत्यकथयम्।

४७

वयं जानीमः
जागर्तौ मनुष्येण क्रियमाणां मानसीं सृष्टिं
स्रष्टा नैवानुकरोति इति।
तथापि
कनिष्ठपक्षत्वेन
स्वप्नस्तु भूयाद् रमणीयवस्तुभूयिष्ठ इति धिया
सरमणीयविन्यासचित्रेण मृदुलेन वस्त्रेणाच्छादिते
उपधाने
शिरोऽवलम्ब्य
निदिद्रासामः।

# ४८

सांप्रदायिकीषु क्रीडासु काश्चन
पटेष्वक्षैः खेलनार्हाः।
याः-

१. क्रीडालुभिरुत्तेजकं द्रव्यं पीतं किमिति संशयं न जनयन्ति।

२. 'अमुके क्रीडालौ सति जयिनि, एतावन्तं ग्लहं ददामि' इति संविदं न विधित्सन्ते।

३.समाप्तायां क्रीडायां द्वेषासूयादिवाक्यानि न सृजन्ति

४.सुन्दरस्य शारिफल(=खेलापट)स्योपरि शारीणां परिणायं(=चालनं), सानन्दं कोलाहलं च कारयन्ति क्रीडालुभिः।

******

नवीनानामन्ताराष्ट्रियक्रीडानाम् आरभट्या
कासाञ्चन सांप्रदायिकीनां क्रीडानां
कलरवः स्थगितः
चक्षूंष्यन्धानि जातानि
पुप्फुसेषु च प्राणवायुर्न वाति।

## ४९

मद्रचिते चित्रे दोषं दिदृक्षसे किम् ?

"हंहो- अत्र.........दृश्यते, तत्र.........दृश्यते।

चत्वारोऽपि कोणाः परस्परेण समा न सन्ति।"

आम्।

"मध्यभागस्य परिमाणो

बाह्यरेखापरिमाणस्याननुगुणोऽस्ति।"

नोक्तमसत्यम्।

"मध्यभागस्थायाः पीतपट्टिकाया उपरि लिखिता

कृष्णा कृशा च रेखा मनोरमा नास्ति।"

धन्योऽस्मि ज्ञापितैतद्विषयः।

"यदि त्वमेतैर्म्लानैर्वर्णैश्चित्रमचित्रयन्

उज्ज्वलैर्वर्णैरेतदचित्रयिष्यः, साध्वभविष्यत्।"

अत्रास्ति मम सम्मतिः।

"अहमन्यं दोषमपश्यम्।

चित्रेऽस्मिन्नधोरेखा........."

अहं न जानामि कैः शब्दैरभिव्यञ्जयेय

मम हृदि वर्तमानं कृतज्ञभावम्।

त्वं मम चित्रं

कनिष्ठपक्षत्वेन

**एकवारम्**

अपश्यः।

## ५०

हे भानो!

उदयस्व एहि च मत्समीपम्।

जातस्त्वं शीतो रक्तवर्णश्चाभवः।

अथ कदुष्णो नारङ्गवर्णश्चाभवः।

तत उष्णः पीतवर्णश्च।

अन्ते दाहकः श्वेतश्च।

अहं कमलपुष्पं सत्

प्रतिदिनं तवोदयं प्रतीक्षे।

एहि स्पृश च मां

दृश्यैः सप्तवर्णैरदृश्याभ्यां च द्वाभ्यां वर्णाभ्यां-

[अतिजम्बू(Infrared)-

अतिरक्त(Ultraviolet)नामकाभ्याम्]

कृपया विकासय

न केवलं मम दलानि,

अपि तु-

अर्बुदसंख्याकान् भ्रमरादिकान् कीटान् स्वागमय्य

मकरन्देन तेषां सत्कारं क्रियासमिति,

तेषामाशिषः प्राप्यासमिति च

हृद्गताम् आशाम्।

## ५१

नाहं वदामि
“पुनर्दर्शनाय यामि” इति।
परन्तु
स्थावराणां जङ्गमानां च जीविनामजीविनां चान्तः
निगूहितं मां
स्वयं प्रदर्शयामि।
“त्वां व्यक्तित्ववन्तं जनमहं प्रत्यभिजानामि।
मामपि व्यक्तित्ववन्तं त्वं प्रत्यभिजानीहि।
अत्रास्मि भोः ! अत्रास्मि भोः !”
इति उच्चैः
द्राङ्क्षामि।